इति रेणुकागर्भसम्भूत-श्रीदुष्टक्षत्रियकुलान्तक-
श्रीभार्गवोपाध्याय-जामदग्न्य-महादेवप्रधानशिष्य-
महाकौलाचार्य-श्रीमत्परशुरामकृतौ-कल्पसूत्रे
वाराहीक्रमो नाम सप्तमः खण्डः समाप्तः ॥ ७॥

अष्टमः खण्डः पराक्रमः

इति विधिवत्कृतवार्तालीवरिवस्यः सिंहासनविद्याहृदयमनुत्तरं पराबीजरूपं धाम तत्क्रमपूर्वं विमृशेत् ॥ ८.१॥

प्रभुहृदयज्ञातुः पदे पदे सुखानि भवन्ति ॥ ८.२॥

अथोऽनुत्तरपद्धतिं व्याख्यास्यामः ॥ ८.३॥

कल्ये समुत्थाय ब्रह्मकोटरवर्तिनि सहस्रदलकमले सन्निविष्टायाः सौवर्णरूपायाः परायाश्चरणयुगलविगलदमृतरसविसरपरिप्लुतं वपुः ध्यात्वा ॥ ८.४॥

स्नातः शुचिवासोवसानः सौः वर्णेन त्रिराचम्य द्विः परिमृज्य सकृद् उपस्पृश्य चक्षुषी नासिके श्रोत्रे अंसे नाभिं हृदयं शिरश्चावमृश्य एवं त्रिराचम्य ॥ ८.५॥

ऊर्णामृदुशुचितममासनं सौवर्णसूर्यजपाभिमन्त्रितं मूलमन्त्रोक्षितमधिष्ठाय ॥ ८.६॥

उदग्वदनो मौनी भूषितविग्रहो मूलपूर्वेण देशिकमनुना मस्तके देशिकमिष्ट्वा ॥ ८.७॥

वामपार्ष्णिघातैः छोटिकात्रयेण पातालादिगतान् भेदावभासिनः विघ्नानुत्सार्य ॥ ८.८॥

शिरोमुखहृन्मूलसर्वाङ्गेषु मूलं विन्यस्य ॥ ८.९॥

काकचञ्चूपुटाकृतिना मुखेन सञ्चोष्यानिलं सप्तविंशतिशो मूलं जप्त्वा वेद्यं नाभौ संमुद्र्य पुनः सप्तविंशतिशो जप्त्वा अङ्गुष्ठेन

शिखां बध्वा पुनरनिलमापूर्य तेन मूले चिदग्निमुत्थाप्य तत्र वेद्यस्य विलयं विभाव्य ॥ ८.१०॥

गोमयेनोपलिप्तचतुरस्रभूतले प्रवहत्पार्श्वकरकृतया मत्स्यमुद्रया दिव्यगन्धाम्बुयुतया भूव्योमवायुवह्निमण्डलानि कृत्वा ॥ ८.११॥

श्यामावत् सामान्यविशेषार्घ्ये सादयेत् ॥ ८.१२॥

सर्वेऽपि पराक्रममनवः सौः वर्णपूर्वाः कार्याः ॥ ८.१३॥

भृगुचतुर्दशषोडशद्विरावृत्या वर्णषडङ्गं सर्वमूलषडावृत्या मन्त्रषडङ्गं च कृत्वा ॥ ८.१४॥

उभाभ्यामर्चयित्वा ॥ ८.१५॥

मूलमुच्चार्य तां चिन्मयीमानन्दलक्षणाम् अमृतकलशपिशितहस्तद्वयां प्रसन्नां देवीं पूजयामि नमः स्वाहा - इति सुधादेवीमभ्यर्च्य तया सम्प्रोक्ष्य वरिवस्यावस्तूनि ॥ ८.१६॥

पूर्वं नाभौ सम्मुद्रितं चिदग्निविलीनं तप्तायोद्रववत् षट्त्रिंशत्तत्त्वकदम्बकं हृत्सरोजे समानीय ॥ ८.१७॥

मूलजप्तैः कुसुमक्षेपैः वक्ष्यमाणैश्च मन्त्रैरासनक्लृप्तिं कुर्यात् - मूलादि-योग-पीठाय नमः - इत्यन्तानि तानि च पृथिव्यप्तेजोवाय्वाकाशगन्धरसरूपस्पर्श शब्दोपस्थपायुपादपाणिवाग्घ्राणजिह्वाचक्षुस्त्वक्श्रोत्रा हङ्कारबुद्धिमनःप्रकृतिपुरुषनियतिकाल रागकलाविद्यामायाशुद्धविद्येश्वरसदाशिवशक्तिशिवाः । एवं पराचक्रं कृत्वा ॥ ८.१८॥

तत्रैतदैक्यविमर्शरूपिणीं षोडशकलां परां देवीमावाह्य ॥ ८.१९॥

अकलङ्कशशाङ्काभा त्र्यक्षा चन्द्रकलावती ।
मुद्रापुस्तलसद्बाहुः पातु मां परमा कला ॥

इति ध्यात्वा ॥ ८.२०॥

मूलादिमुच्चार्य प्रकाशरूपिणी पराभट्टारिका
मूलमध्यमुच्चार्य विमर्शरूपिणी पराभट्टारिका
मूलान्त्यमुच्चार्य प्रकाशविमर्शरूपिणी पराभट्टारिकेति
त्रिभिः देव्या मूलहृन्मुखेष्वभ्यर्च्य समस्तमुच्चार्य
महाप्रकाशविमर्शरूपिणी पराभट्टारिकेति दशवारमवमृश्य
तामेव देवीं कालाग्निकोटिदीप्तां ध्यात्वा ॥ ८.२१॥

तस्यां क्रियासमभिव्याहारेण वेद्यमखिलं हुत्वा ॥ ८.२२॥

मूलमुच्चार्य सामान्यपादुकया स्वमस्तकस्थाय गुरवे अर्घ्यं
निवेद्य ॥ ८.२३॥

पुनश्चिदग्निमुद्दीप्तं विभाव्य ॥ ८.२४॥

दिव्यौघं तिस्रः पादुकाः सिद्धौघं तिस्रः मानवौघमष्टावभ्यर्च्य
॥ ८.२५॥

पराभट्टारिकाऽघोरश्रीकण्ठशक्तिधरक्रोधत्र्यम्बकानन्द
प्रतिभादेव्यम्बा वीरसंविदानन्दमधुरादेव्यम्बा
ज्ञानश्रीरामयोगाः - इति पराक्रमपादुकाः ॥ ८.२६॥

ततः कलामनुना बलिं निवेद्य ॥ ८.२७॥

हविश्शेषमात्मसात्कुर्यात् । इति शिवम् ॥ ८.२८॥

इति रेणुकागर्भसम्भूत-श्रीदुष्टक्षत्रियकुलान्तक-
श्रीभार्गवोपाध्याय-जामदग्न्य-महादेवप्रधानशिष्य-
महाकौलाचार्य-श्रीमत्परशुरामकृतौ-कल्पसूत्रे
पराक्रमो नामाष्टमः खण्डः समाप्तः ॥ ८॥

## नवमः खण्डः होमविधिः

अथ स्वेष्टमन्त्रस्य होमविधानं व्याख्यास्यामः ॥ ९.१॥

चतुरस्रं कुण्डमथवा हस्तायाममङ्गुष्ठोन्नतं स्थण्डिलं
कृत्वा ॥ ९.२॥

सामान्यार्घ्यमुपशोध्य तेनावोक्ष्य ॥ ९.३॥

प्राचीरुदीचीस्तिस्रस्तिस्रो रेखा लिखित्वा ॥ ९.४॥

तासु रेखासु ब्रह्मयमसोमरुद्रविष्णिवन्द्रान्
षट्तारीनमस्सम्पुटितानभ्यर्च्य ॥ ९.५॥

सहस्रार्चिषे हृदयाय नमः स्वस्तिपूर्णाय शिरसे स्वाहा उत्तिष्ठ
पुरुषाय शिखायै वषट् धूमव्यापिने कवचाय हुं सप्तजिह्वाय
नेत्रत्रयाय वौषट् धनुर्धराय अस्त्राय फट् - इति षडङ्गं
विधाय तेन षडङ्गेन कुण्डमभ्यर्च्य ॥ ९.६॥

तत्राष्टकोणषट्कोणत्रिकोणात्मकं अग्निचक्रं
विलिख्य पीतायै श्वेतायै अरुणायै कृष्णायै धूम्रायै तीव्रायै
स्फुलिङ्गिन्यै रुचिरायै ज्वालिन्यै नम - इति त्रिकोणमध्ये वह्नेः
पीठशक्तीः सम्पूज्य - तं तमसे रं रजसे सं सत्त्वाय आम्
आत्मने अम् अन्तरात्मने पं परमात्मने ह्रीं ज्ञानात्मने नमः -
इति तत्रैवाभ्यर्चयेत् ॥ ९.७॥

ततो जनिष्यमाणवह्नेः पितरौ वागीश्वरीवगीश्वरौ
पीठेऽभ्यर्च्य तयोर्मिथुनीभावं भावयित्वा ह्रीं
वागीश्वरीवागीश्वराभ्यां नमः - इति ध्यात्वा ॥ ९.८॥

अरणेः सूर्यकान्तात् द्विजगृहाद्वा वह्निमुत्पाद्य
मृत्पात्रे ताम्रपात्रे वा आग्नेय्यामैशान्यां नैरृत्यां
वा निधाय अग्निशकलं क्राव्यादांशं नैरृत्यां विसार्य
निरीक्षणप्रोक्षणताडनावकुण्ठनादिभिः विशोध्य ॐ
वैश्वानर जातवेद इहावह लोहिताक्ष सर्वकर्माणि साधय स्वाहा
- इति मूलाधारोद्गतसंविदं ललाटनेत्रद्वारा निर्गमय्य तं
बाह्याग्नियुक्तं पातयेत् ॥ ९.९॥

कवचमन्त्रेण इन्धनैराच्छाद्य ॥ ९.१०॥

अग्निं प्रज्वलितं वन्दे जातवेदं हुताशनम् ।
सुवर्णवर्णमनलं समिद्धं विश्वतोमुखम् ॥

इत्युपस्थाय ॥ ९.११॥

उत्तिष्ठ हरितपिङ्गल लोहिताक्ष सर्वकर्माणि साधय मे देहि
दापय स्वाहा - इति वह्निमुत्थाप्य ॥ ९.१२॥

चित्पिङ्गल हन हन दह दह पच पच सर्वज्ञाज्ञापय स्वाहा
इति प्रज्वाल्य ॥ ९.१३॥

षट्तारवाचो नमोमन्त्रेण पुंसवनसीमन्तजातकर्म
नामकरणान्नप्राशनचौलोपनयनगोदानविवाह
कर्माण्यमुकाग्नेरमुकं कर्म कल्पयामि नमः - इति विधाय ॥ ९.१४॥

परिषिच्य परिस्तीर्य परिधाय ॥ ९.१५॥

त्रिणयनमरुणाभं बद्धमौलिं सुशुक्लां-
शुकमरुणमनेकाकल्पमम्भोजसंस्थम् ।
अभिमतवरशक्तिस्वस्तिकाभीतिहस्तं
नमत कनकमालालङ्कृतांसं कृशानुम् ॥

इति ध्यात्वा ॥ ९.१६॥

(१) अष्टकोणे जातवेदसे सप्तजिह्वाय हव्यवाहाय अश्वोदराय
वैश्वानराय कौमारतेजसे विश्वमुखाय देवमुखाय नमः - इति
(२) षट्कोणे षडङ्गं (३) त्रिकोणे अग्निमन्त्रेण अग्निं पूजयित्वा
॥ ९.१७॥

हिरण्यायै कनकायै रक्तायै कृष्णायै सुप्रभायै अतिरक्तायै
बहुरूपायै नमः - इत्यग्नेः सप्तजिह्वासु मूलशुद्धेनाज्येन
सप्ताहुतीः कुर्यात् ॥ ९.१८॥

वैश्वानरोत्तिष्ठ चित्पिङ्गलैरग्नेस्त्रिधाऽऽहुतिं विधाय ॥ ९.१९॥

बहुरूपजिह्वायामिष्टां देवतामावाह्य पञ्चोपचारैरुपचर्य ॥ ९.२०॥

सर्वासां चक्रदेवीनामेकाहुतिं हुत्वा नमोऽन्तान् पादुकाऽन्तान्
शेषान् मन्त्रान् स्वाहाऽन्तान् विधाय जुहुयात् ॥ ९.२१॥

अथ प्रधानदेवतायै दशाहुतीर्जुहुयात् ॥ ९.२२॥

यदि काम्यमीप्सेदभीष्टदेवतायै विज्ञाप्य सङ्कल्पं
कृत्वैतावत्कर्मसिद्ध्यर्थमेतावदाहुतीः करिष्यामीति ॥ ९.२३॥

तिलाज्यैः शान्त्या, अन्नेनान्नायामृताय, समिच्चूत
पल्लवैर्ज्वरशमाय, दूर्वाभिरायुषे,
कृतमालैर्धनाय, उत्पलैर्भोगाय, बिल्वदलै
राज्याय, पद्मैः साम्राज्याय,
शुद्धलाजैः कन्यायै, नन्द्यावर्तैः कवित्वाय,
वञ्जुलैः पुष्ट्यै, मल्लिकाजातीपुन्नागैर्भाग्याय,
बन्धूकजपाकिंशुकबकुलमधुकरैरैश्वर्याय,
लवणैराकर्षणाय, कदम्बैः सर्ववश्याय, शालितण्डुलैर्धान्याय,
कुङ्कुमरोचनादिसुगन्धैः सौभाग्याय, पलाशपुष्पैः
कपिलाघृतैर्वा तेजसे, धत्तूरकुसुमैरुन्मादाय,
विषवृक्षैः निम्बश्लेष्मातकविभीतकसमिद्भिः
शत्रु-नाशाय, निम्बतैलाक्तलवणैर्मारणाय,
काकोलूकपक्षैर्विद्वेषणाय, तिलतैलाक्तमरीचैः
कासश्वासनाशाय जुहुयात् ॥ ९.२४॥

बलिं प्रदाय ॥ ९.२५॥

ॐ भूरग्नये च पृथिव्यै च महते च स्वाहा ।
ॐ भुवो वायवे चान्तरिक्षाय च महते च स्वाहा ।
ॐ सुवरादित्याय च दिवे च महते च स्वाहा ।
ॐ भूर्भुवस्सुवश्चन्द्रमसे च नक्षत्रेभ्यश्च दिग्भ्यश्च
महते च स्वाहा । इति चतुर्भिर्मन्त्रैः महाव्याहृतिहोमं
कृत्वा ॥ ९.२६॥

इतः पूर्वं प्राणबुद्धिदेहधर्माधिकारतो
जाग्रत्स्वप्नसुषुप्त्यवस्थासु मनसा वाचा कर्मणा हस्ताभ्यां
पद्भ्यामुदरेण शिश्ना यत् स्मृतं यदुक्तं यत् कृतं तत्
सर्वं ब्रह्मार्पणं भवतु स्वाहा, इति ब्रह्मार्पणाहुतिं कृत्वा ॥ ९.२७॥

चिदग्निं देवतां चात्मन्युद्वासयामि नमः - इत्युद्वास्य ॥ ९.२८॥

तद्भस्मतिलकधरो लोकसम्मोहनकारः सुखी विहरेत् । इति शिवम् ॥ ९.२९॥

इति रेणुकागर्भसम्भूत-श्रीदुष्टक्षत्रियकुलान्तक-
श्रीभार्गवोपाध्याय-जामदग्न्य-महादेवप्रधानशिष्य-
महाकौलाचार्य-श्रीमत्परशुरामकृतौ-कल्पसूत्रे
होमविधिर् नाम नवमः खण्डः समाप्तः ॥ ९॥

## दशमः खण्डः सर्वसाधारणक्रमः

अथातः सर्वेषां मन्त्राणां सामान्यपद्धतिं व्याख्यास्यामः ॥ १०.१॥

श्यामावत् सन्ध्याऽऽद्यर्घ्यशोधनपर्यन्तं न्यासवर्जम्
॥ १०.२॥

अनुक्तषडङ्गस्य षड्जातियुक्तमायया षडङ्गम् ॥ १०.३॥

बिन्दुत्रिषडरनागदलचतुष्पत्रचतुरस्रमयं
चक्रम् ॥ १०.४॥

बिन्दौ मुख्यदेवतेच्छाज्ञानक्रियाशक्तयस्त्र्यस्रे
षडरे तत्तत्षडङ्गान्यष्टदले ब्राह्म्याद्याः चतुर्दले
गणपतिदुर्गाबटुकक्षेत्रेशाश्चतुरस्रे दिक्पालाः ॥ १०.५॥

त्रितारीकुमारीभ्यां सर्वे क्रममन्त्राः प्रयोक्तव्याः ॥ १०.६॥

तत्तन्मूलेनावाहनं कलामनुना बलिरनेन क्रमेणाहुतिः ॥ १०.७॥

अथ रश्मिमाला ॥ १०.८॥

सुप्तोत्थितेनैषा मनसैकवारमावर्त्या ॥ १०.९॥

गायत्र्यादि प्रथमं रश्मिपञ्चकम्
(१) प्रणवो भूर्भुवस्सुवः -
तत्सवितुर्वरेणियं भर्गो देवस्य धीमहि ।
धियो यो नः प्रचोदयात् ॥

इति त्रिंशद्वर्णा गायत्री ॥

(२) यत इन्द्र भयामहे ततो नो अभयं कुरु ।
मघवञ्छग्धि तव तन् न ऊतये विद्विषो विमृधो जहि ॥

स्वस्तिदा विशस्पतिर्वृत्रहा विमृधो वशी ।
वृषेन्द्रः पुर एतु नः स्वस्तिदा अभयङ्करः ॥

इत्यैन्द्री सप्तषष्ट्यर्णा सङ्कटे भयनाशिनी ॥

(३) प्रणवो घृणिस्सूर्य आदित्य इत्यष्टार्णा सौरी तेजोदा ॥

(४) प्रणवः केवलो ब्रह्मविद्या मुक्तिदा ॥

(५) तारः परोरजसे सावदोम् इति नवार्णा तुर्यगायत्री
स्वैक्यविमर्शिनी ॥

रश्मिपञ्चकमेतन्मूलहृत्फालविधिबिलद्वादशान्तबीजतया विमृष्टव्यम्
॥ १०.१०॥

चाक्षुष्मतीविद्याऽदि द्वितीयं रश्मिपञ्चकम्
(१) सूर्याक्षितेजसे नमः । (२) खेचराय नमः । (३) असतो मा सद्
गमय । (४) तमसो मा ज्योतिर्गमय । (५) मृत्योर्माऽमृतं गमय ।
(६) उष्णो भगवान् शुचिरूपः । (७) हंसो भगवान् शुचिरप्रतिरूपः ॥

(८) विश्वरूपं घृणिनं जातवेदसं
हिरण्मयं ज्योतिरेकं तपन्तम् ।
सहस्ररश्मिः शतधा वर्तमानः
प्राणः प्रजानामुदयत्येष सूर्यः ॥

(९) ॐ नमो भगवते सूर्याय अहो वाहिनि वाहिन्यहो वाहिनि वाहिनि
स्वाहा ॥

(१०) वयस्सुपर्णा उपसेदुरिन्द्रं प्रियमेधा ऋषयो नाथमानाः ।
अपध्वान्तमूर्णुहि पूर्धि चक्षुर्मुमुग्ध्यस्मान्निधयेव बद्धान् ॥

(११) पुण्डरीकाक्षाय नमः । (१२) पुष्करेक्षणाय नमः । (१३)
अमलेक्षणाय नमः । (१४) कमलेक्षणाय नमः । (१५) विश्वरूपाय
नमः । (१६) श्रीमहाविष्णवे नमः ॥

इति षोडशमन्त्रसमष्टिरूपिणी दूरदृष्टिप्रदा चाक्षुष्मती
विद्या ॥ १०.११॥

प्रणवो गन्धर्वराज विश्वावसो मम अभिलषितामुकां कन्यां
प्रयच्छ ततोऽग्निवल्लभेत्युत्तमकन्याविवाहदायिनी विद्या
॥ १०.१२॥

तारो नमो रुद्राय पथिषदे स्वस्ति मा सम्पारय - इति
मार्गसङ्कटहारिणी विद्या ॥ १०.१३॥

तारस्तारे पदमुक्त्वा तुत्तारे तुरे शब्दं च दहनदयितेति
जलापच्छमनी विद्या ॥ १०.१४॥

अच्युताय नमः अनन्ताय नमः गोविन्दाय नमः - इति
महाव्याधिविनाशिनी नामत्रयी विद्या ॥ १०.१५॥

पञ्चेमा रश्मयो मूलादिपरिकरतया प्रपञ्च्याः ॥ १०.१६॥

प्रणवः कमला भुवना मदनो ग्लाच्चतुर्दशपञ्चदशौ
गं गणपतये वरयुगलं द सर्वजनं मे शब्दो
वशमानयाग्निवामलोचनेति महागणपतिविद्या प्रत्यूह शमनी ॥ १०.१७॥

प्रणवो नमः शिवायै प्रणवो नमः शिवायेति द्वादशार्णा
शिवतत्त्वविमर्शिनी विद्या ॥ १०.१८॥

प्रणवः काष्टम दक्षश्रुतिबिन्दुपिण्डो भृगुषोडशो मां
पालयद्वन्द्वमिति दशार्णा मृत्योरपि मृत्युरेषा विद्या ॥ १०.१९॥

तारः नमो ब्रह्मणे धारणं मे अस्त्वनिराकरणं धारयिता भूयासं
कर्णयोः श्रुतं माच्योढ्वं ममामुष्य ॐ - इति श्रुतधारिणी विद्या
॥ १०.२०॥

श्रीकण्ठादिक्षान्ताः सर्वे वर्णाः बिन्दुसहिताः मातृका
सर्वज्ञताकरी विद्या ॥ १०.२१॥

रश्मयः पञ्च मूलादिरक्षाऽऽत्मकतया यष्टव्याः ॥ १०.२२॥

शिवशक्तिकामक्षितिमायारवीन्दुस्मरहंस

पुरन्दरभुवनापरामन्मथवासवभौवनाश्च शिवादिविद्या स्वस्वरूपविमर्शिनी ॥ १०.२३॥

क्लशब्दाद्वामेक्षणबिन्दुरेकोऽनन्तयोनिबिन्दवोऽन्यः शङ्करपरात्रिशूलविसृष्टयोऽपरश्चैत एव खण्डाः प्रतिलोमाः षट्कूटा सम्पत्करी विद्या ॥ १०.२४॥

समुच्चार्य सृष्टिनित्ये स्वाहेति हमित्युक्त्वा स्थितिपूर्णे नमः - इत्यनलबिन्दुमहासंहारिणी कृशे पदाच्चण्डशब्दः कालि फट् - इत्यग्निबिन्दुसप्तममुद्राबीजं महानाख्ये अनन्तभास्करि महाचण्डपदात् कालि फट् - इति सृष्टिस्थितिसंहाराख्यानां प्रातिलोम्यं खेचरीबीजं महाचण्डवाणी च योगीश्वरीति विद्यापञ्चकरूपिणी कालसङ्कर्षिणी परमायुः प्रदायिनी ॥ १०.२५॥

त्रितारी सप्तममुद्रा शिवयुक्शक्तिरहंयुगलमेतत्पञ्चैव लोम्यमिति शुद्धज्ञानमयी शाम्भवी विद्या ॥ १०.२६॥

भृगुत्रिशूलविसृष्टयः पराविद्या ॥ १०.२७॥

पञ्चेमा रश्मयो मूलाद्यधिष्ठानतया परिकल्पनीयाः ॥ १०.२८॥

वाक्कामशक्तयोऽनुलोमविलोमाः पुनरनुलोमाः - इति श्रियो ऽङ्गबाला ॥ १०.२९॥

भुवना कमला सुभगा तारो नमो भगवति पूर्णे शेखरमन्न ममाभिलषितमुक्त्वाऽन्नं देहि दहनजायेति श्रिय उपाङ्गमन्नपूर्णा ॥ १०.३०॥

प्रणवः पाशादित्र्यर्णा एहि परमेश्वरीत्युक्त्वा वह्निवामाक्ष्युक्तिरिति श्रीप्रत्यङ्गमश्वारूढा ॥ १०.३१॥

तारित्रिकं सप्तममुद्रा
शिवशक्तिसंवर्तपुपञ्चमपुरन्दरवरयूं
शक्तिशिवक्षमान्ते वादिवरयीं
शिवभृगुत्रिशूलबिन्दुभृगुशिवत्रिशूलविसृष्टयः
श्रीपूर्वं स्वगुरुनामतोऽष्टाक्षरी चेति श्रीपादुका च ॥ १०.३२॥

एताभिश्चतसृभिर्युक्ता मूलविद्या साम्राज्ञी मूलाधारे विलोचनीया

॥ १०.३३॥

मादनशक्तिबिन्दुमालिनीवासवमायाघोषदोषाकर
कन्दर्पगगनमघवद्भुवनभृगुपुष्पबाणभूमायेति
सेयं तस्या महाविद्या ॥ १०.३४॥

वाङ्नतिरुच्छिष्टचाण्डलि मातमुक्त्वा गि सर्वपदाद्वशङ्करि
वह्निवामलोचनेति श्यामाऽङ्गं लघुश्यामा ॥ १०.३५॥

कुमारीमुच्चार्य वदद्वन्द्वं वाक्पदं वादिनि वह्निप्रियेति
श्यामोपाङ्गं वाग्वादिनी ॥ १०.३६॥

प्रणव ओपिनाकुदम्पवृपसस्यैचशाचामाहदशब्दाः
ष्टाधानलीतैःरिताविःर्ववाईनारुमिहवायेच्छेखरा
नकुली श्यामाप्रत्यङ्गम् ॥ १०.३७॥

ललितापादुकादित्रिकस्थाने कुमारी योज्या शिष्टं तद्वत् - इति
श्यामापादुका च ॥ १०.३८॥

चतसृभिर्युक्ता हृच्चक्रे श्यामा यष्टव्या ॥ १०.३९॥

तद्विद्या तु त्रितारी कुमारी नभवश्रीतंश्वसजम
हासमुरंनिमायासरावकसस्त्रीरुवकस
दुमृवकससवकसलोवकाकंवमायहावर्णा
ओंमोगतिमागीरिर्वननोरिर्वख
जिमदनश्रींर्वजशंरिर्वपुषशंरिर्व
ष्टगशंरिर्वत्वशंरिर्वकशंरिमुमेशनस्वाऽन्त
मन्त्रादि बीजषट्कं प्रातिलोम्यमिति अष्टनवतिवर्णाः ॥ १०.४०॥

हरः सबिन्दुर्वापूर्वराहि स्थाणुः सबिन्दुरुन्मत्तपदं
भैशब्दो रविपादुकाभ्यां नम - इति वार्तात्यङ्गं लघुवार्ताली
॥ १०.४१॥

वेदादिभुवनं नमो वाराहि घोरे स्वप्नं ठद्वितयं अग्निदारा -
इति वार्ताल्युपाङ्गं स्वप्नवार्ताली स्वप्ने शुभाशुभफलवक्त्री
॥ १०.४२॥

वाग्घृदयं भगवति तिरस्करिणि महामाये

पशुपदाज्जनमनश्चक्षुस्तिरस्करणं कुरु द्वितयं वर्म फट्
पावकपरिग्रह इति वार्तालीप्रत्यङ्गं तिरस्करिणी ॥ १०.४३॥

श्यामापादुकामन्त्रादित्रिबीजमपहाय वाग्ग्लौम् - इति योज्यम् ।
एषा वार्तालीपादुका ॥ १०.४४॥

विद्याभिरेताभिर्युक्ता फालचक्रे परिपूज्या भगवतीयं
भूदारमुखी ॥ १०.४५॥

मनुरिदमीयोऽयं वाक्पुटितं ग्लौं
न भववालिर्तावाहिरावहखिरामुअंअंनिमः-
धेधिनजञ्जंनिमः हेहिन स्तंस्तंनिमःर्वष्ट
दुनांर्वेसवाक्तक्षुखतिह्वाभकुकुशीवशब्दा
यथाक्रमं मोगतिर्तावालिरावाहिरामुवहखि
धेधिनरुंरुंनिमः भेभिनमोमोनिमः भेभि
नसदुप्रष्टासषांर्वचिचर्मुगजिस्तंनं
रुरुघ्रंश्यंशब्दोपेता वाक् ग्लौं विसृष्ट्यन्ताश्च
सप्तमाश्चत्वारो वर्मास्त्राय फडिति द्वादशोत्तरशताक्षरा ॥ १०.४६॥

पञ्चमैकादशबीजवर्जा श्रीरेव श्रीपूर्तिविद्या ब्रह्मकोटरे
यष्टव्या ॥ १०.४७॥

श्यामापादुकाप्रथमत्रिकस्थाने तारत्रयं कुमारी वाक् ग्लौं
इति योज्यम् । ततः परस्ताच्छेषं समानम् ॥ १०.४८॥

इयं महापादुका सर्वमन्त्रसमष्टिरूपिणी स्वैक्यविमर्शिनी
महासिद्धिप्रदायिनी द्वादशान्ते यष्टव्या ॥ १०.४९॥

एवं रश्मिमाला सम्पूर्णा । सर्वगात्रः शुद्धविद्यामयतनुः
स एव परमशिवः ॥ १०.५०॥

अथ विघ्न-देवताः । इरिमिलिकिरिकिलिपदात् परिमिरोमित्येकः
। प्रणवो माया नमो भगवति महात्रिपुराद्वैवर्णाद्रविपदमनु
मम त्रैपुररक्षां कुरु कुरु - इति द्वितीयः । संहर संहर
विघ्नरक्षोविभीषकान् कालय हुं फट् स्वाहा - इति तृतीयः । ब्लूं
रक्ताभ्यो योगिनीभ्यो नमः - इति चतुर्थः । सां सारसाय बह्वाशनाय
नमः - इति पञ्चमः । दुमुलुषुमुलुषु माया चामुण्डायै नमः -
इति षष्ठः । एते मनवो ललिताजपविघ्नदेवताः ॥ १०.५१॥

हसन्ति हसितालापे पदं मातमुक्त्वा गीपरिचारिके मम भयविघ्ननाशं कुरुद्वितयं सविसर्गठत्रितयमिति श्यामाविघ्नदेवी ॥ १०.५२॥

स्तं स्तम्भिन्यै नमः - इति कोलमुखीविघ्नदेवी ॥ १०.५३॥

एते तत्तज्जपारम्भे जप्तव्याः ॥ १०.५४॥

ललिता प्राह्णे । अपराह्णे श्यामा । वार्ताली रात्रौ । ब्राह्मे मुहूर्ते परा ॥ १०.५५॥

व्यवहारदेशस्वात्म्यप्राणोद्वेगसहायामयवयांसि प्रविचार्यैव तदनुकूलः पञ्चमादिपरामर्शः ॥ १०.५६॥

सर्वभूतैरविरोधः ॥ १०.५७॥

परिपन्थिषु निग्रहः ॥ १०.५८॥

अनुग्रहः संश्रितेषु ॥ १०.५९॥

गुरुवत् गुरुपुत्रकलत्रादिषु वृत्तिः ॥ १०.६०॥

आदिमस्य स्वयं सेवनमागमदृष्ट्या दोषदं त्याज्यम् ॥ १०.६१॥

सानन्दस्य रुचिरस्यामोदिनो लघुनो वार्क्षस्य गौडस्य पिष्टप्रकृतिनः अन्धसो वाल्कलस्य कौसुमस्य वा यथादेशसिद्धस्य वा तस्य परिग्रहः ॥ १०.६२॥

तदनन्तरं मध्यमयोरस्वयमसुविमोचनम् । उपादिमे नायं नियमः । मध्यमे तु स्वयं संज्ञपने तत्रायं मन्त्रः -
उद्बुध्यस्व पशो त्वं हि नाशिवस्त्वं शिवो ह्यसि ।
शिवोत्कृत्तमिदं पिण्डं मत्तस्त्वं शिवतां व्रज ॥

इति ॥ १०.६३॥

सर्वत्र वचनपूर्वं प्रवृत्तिः ॥ १०.६४॥

दशकुलवृक्षानुपप्लवः ॥ १०.६५॥

स्त्रीवृन्दादिमकलशसिद्धलिङ्गिक्रीडाऽऽकुलकुमारीकुल
सहकाराशोकैकतरुपरेतावनिमत्तवेश्याश्यामारक्त
वसनामत्तेभानां दर्शने वन्दनम् ॥ १०.६६॥

पञ्चपर्वसु विशेषार्चा ॥ १०.६७॥

आरम्भतरुणयौवनप्रौढतदन्तोन्मनानवस्थोल्लासेषु
प्रौढान्ताः समयाचाराः । ततः परं यथाकामी । स्वैरव्यवहारेषु
वीरावीरेष्वयथामननादधःपातः ॥ १०.६८॥

रक्तात्यागविरक्ताऽऽक्रमणोदासीनाप्रलोभनवर्जनम् ॥ १०.६९॥

घृणाशङ्काभयलज्जाजुगुप्साकुलजातिशीलानां
क्रमेणावसादनम् ॥ १०.७०॥

गुरुप्रगुरुसन्निपाते प्रगुरोः प्रथमं प्रणतिः तदग्रे
तदनुरोधेन तन्नतिवर्जनम् ॥ १०.७१॥

अभ्यर्हितेष्वपराङ्मुख्यम् ॥ १०.७२॥

मुख्यतया प्रकाशविभावना ॥ १०.७३॥

अधिजिगमिषा शरीरार्थासूनां गुरवे धारणम् ॥ १०.७४॥

एतदुक्तकरणम् ॥ १०.७५॥

अपरीक्षणं तद्वचने व्यवस्था ॥ १०.७६॥

सर्वथा सत्यवचनम् ॥ १०.७७॥

परदारधनेष्वनासक्तिः ॥ १०.७८॥

स्वस्तुतिपरनिन्दामर्मविरुद्धवचनपरिहास
धिक्काराक्रोशत्रासनवर्जनम् ॥ १०.७९॥

प्रयत्नेन विद्याऽऽराधनद्वारा पूर्णख्यातिसमावेशनेच्छा

चेत्येते सामायिकाचाराः ॥ १०.८०॥

परे च शास्त्रानुशिष्टाः ॥ १०.८१॥

इत्थं विदित्वा विधिवदनुष्ठितवतः कुलनिष्ठस्य सर्वतः कृतकृत्यता शरीरत्यागे श्वपचगृहकाश्योर्नान्तरं जीवन्मुक्तः ॥ १०.८२॥

य इमां दशखण्डीं महोपनिषदं महात्रैपुरसिद्धान्तसर्वस्वभूतामधीते सः - सर्वेषु यज्ञेषु यष्टा भवति यं यं क्रतुमधीते तेन तेनास्येष्टं भवति इति हि श्रूयते इत्युपनिषत् - इति शिवम् ॥ १०.८३॥

अथातः सर्वेषां मन्त्राणां अथ स्वेष्टमन्त्रस्य इति विधिवत्, इत्थं साङ्गां, इयमेव महती विद्या, अथ प्राथमिके चतुरस्रे, अथ हृच्चक्रस्थितां, एवं गणपतिमिष्ट्वा, इत्थं सद्गुरोः, अथातो दीक्षां व्याख्यास्यामः । अथ एवं, अथ इत्थं, अथ स्वेष्टेति पञ्च ॥ १०.८४॥

इति रेणुकागर्भसम्भूत-श्रीदुष्टक्षत्रियकुलान्तक-श्रीभार्गवोपाध्याय-जामदग्न्य-महादेवप्रधानशिष्य-महाकौलाचार्य-श्रीमत्परशुरामकृतौ-कल्पसूत्रे सर्वसाधारणक्रम नाम दशमः खण्डः समाप्तः ॥ १०॥

इति श्रीपरशुरामकल्पसूत्रं प्रथमोभागः सम्पूर्णम् ॥

द्वितीयोभागः (अनुबन्धः - परशुरामकल्पसूत्रपरिशिष्टम्)
एकादशः खण्डः यन्त्रविधानम्

अथातो वार्तालीसिद्धियन्त्रं व्याख्यास्यामः ॥ ११.१॥

भुवनेश्वरीबीजमध्ये वृत्तद्वयं विधाय तन्मध्ये व्यतिभिन्नं चतुरश्रद्वयं विधाय तदन्तर्वृत्तं कृत्वा तदन्तर्वृत्तसप्तकयुक्तानि सप्तषट्कोणानि यथासम्प्रदायं विदध्यात् ॥ ११.२॥

तत्र अष्टसु कोणेषु अष्टस्वन्तराळेषु च दशोत्तरशताक्षरीविद्यायाः षोडशवर्णान् अकारादिककारान्तषोडशस्वररहितषोडशवर्णसहितान् संलिख्य पूर्वषट्कोणषट्सु कोणेषु षट्सु अन्तरालेषु च खकारादिडकारान्तान् तद्द्वादशवर्णान् संलिख्य पुनरग्निकोणस्थषट्कोणे ढकारादिमकारान्तान् द्वादशवर्णसहितान् द्वादशवर्णान् राक्षसकोणस्थषट्कोणे यकाराद्याकारान्तद्वादशवर्णयुक्तान् द्वादशवर्णान् पश्चिमकोणे इकाराद्यौकारान्तसहितान् वसुकोणे अङ्कारादिटकारान्तसहितान् दश (ईश)कोणे ठकारादिबकारान्तयुतान् मध्यषट्कोणे भकारादिक्षकारान्तसंयुक्तान् विलिख्य लक्षताद्यद्वयवृत्तान्तरालवीथ्यां शिष्टान् दशवर्णान् ओगजडदबलकृसंयुक्तान् विलिखेत् ॥ ११.३॥

अथ नवग्रहयन्त्रं व्याख्यास्यामः । नवकोष्ठान् विधाय, नवसु कोणेषु वृत्तत्रयं विधाय, नवकर्णिकासु नवकोष्ठान् विलिख्य, नवसु कोष्ठेषु मध्यकोष्ठेषु मध्यकोष्ठ- वृत्तत्रयं कर्णिकास्थ नवकोष्ठं, मध्यकोष्ठे मकारसहितं प्रणवं विलिख्य, शिष्टेष्वष्टसु कोष्ठेषु अकाराद्यृकारान्तानष्टस्वरान् विलिख्य, अन्तर्वृत्तान्तराले मकारसहितान् षोडशस्वरान् लिखित्वा बहिर्वृत्तान्तराले अकारादक्षकारान्तान् मातृकार्णान् विलिखेत् ॥ ११.४॥

एवं भास्करमण्डलं मध्ये कृत्वा पूर्वकोष्ठवृत्तत्रय- कर्णिकास्थितनवसु कोष्ठेषु मध्यकोष्ठे ऌकारगर्भं प्रणवं विलिख्य, पूर्वाद्यष्टसु कोष्टेषु ऌकारादिविसर्गान्तानष्टस्वरांश्च विलिख्य, अन्तर्वृत्तान्तराले ऌकारसहितान् षोडश- स्वरान्, संलिख्य बाह्यवृत्तान्तराले अकारादिक्षका- रान्तान् लिखेत् ॥ ११.५॥

एवं चन्द्रमण्डलं विधाय, अग्निस्थितवृत्तत्रयकर्णिका- नवकोष्ठमध्यकोष्ठे प्रणवगर्भककारं विलिख्य, ईशानकोष्ठा- दिराक्षसकोष्ठान्तं कवर्गं विलिख्य, पश्चिमकोष्ठादिसोम- कोष्ठान्तकोष्ठत्रये भौमायेति वर्णत्रयं विलिख्य, अन्तर्वृत्ता- न्तराले ककारसहितान् षोडशस्वरान् संलिख्य, बाह्यवृत्ता- न्तरालवीथ्यां मातृकां लिखेत् । एवं भौममण्डलं विधाय बुधमण्डलं लिखेत् ॥ ११.६॥

दक्षिणकोष्ठस्थवृत्तत्रयकर्णिकास्थितनवकोष्ठेषु मध्य- कोष्ठे च कागर्भं प्रणवं विलिख्य, ईशानादिपञ्चकोष्ठेषु चवर्गं विलिख्य, कोष्टत्रये बुधायेति वर्णत्रयं च विलिख्य पूर्ववत्

षोडशस्वरसहितं चकारं विलिख्य, मातृकार्णं च विलिख्य, नैरृतिकोष्ठस्थवृत्तत्रयकर्णिकास्थितनवकोष्ठके मध्यकोष्ठे पकारगर्भं प्रणवं विलिख्य, शिवादिकोष्ठपञ्चके पवर्गं विलिख्य, शिष्टकोष्ठत्रये सौरये इति शनिनामवर्णान् आलिख्य, अन्तरालद्वये पकारं मातृकां च विलिख्य, पश्चिमकोष्ठस्थवृत्तत्रयकर्णिकामध्ये कोष्ठनवकं विधाय, तन्मध्यकोष्ठे टकारगर्भं प्रणवं विलिख्य, ईशानादिकोष्ठ-पञ्चके टवर्णान् विलिख्य, कोष्ठत्रये गुरव इति विलिख्य, पूर्ववदन्तरालद्वये टवर्गं मातृकां च विलिखेत् ॥ ११.७॥

एवं गुरुमण्डलं विधाय वायुकोष्ठे मध्ये यकारगर्भं प्रणवं विलिख्य, ईशानादिकोष्ठपञ्चके यवर्गं विलख्य, राहव इति लिखित्वा, सोमकोष्ठमध्ये कोष्ठे तकारगर्भं प्रणवं लिखित्वा, ईशादिकोष्ठेषु तवर्गं शुक्रायेति विलिख्य, ईशानकोष्ठे मध्ये शकारं विलिख्य, ईशाद्यष्टसु कोष्ठेषु षवर्गं केतव - इति च विलिख्य, अन्तरालद्वये षोडशस्वरसहितं शकारं मातृकां च विलिखेत् इति नवग्रहचक्रं विधाय, नवग्रहपूजां कुर्यात् - इति शिवम् ॥ ११.८॥

इति रेणुकागर्भसम्भूत-श्रीदुष्टक्षत्रियकुलान्तक-श्रीभार्गवोपाध्याय-जामदग्न्य-महादेवप्रधानशिष्य-महाकौलाचार्य-श्रीमत्परशुरामकृतौ-कल्पसूत्रे यन्त्रविधान नामैकादशः खण्डः समाप्तः ॥ ११॥

## द्वादशः खण्डः मन्त्रविधानम्

अथातः शिवात्मकान् मन्त्रान् व्याख्यास्यामः ॥ १२.१॥

ऐं ह्रीं श्रीं ह्स्ख्फ्रें हसहहरौः अमृतविग्रहा पञ्चार्णा (५) ॥ १२.२॥

ॐ जुं सः पालय पालय सः जुं ॐ इति मृत्युञ्जय विद्या द्वादशार्णा (१२) ॥ १२.३॥

श्रीं ह्रीं क्लीं - त्रिपुटाविद्या - इति त्रिवर्णा (३) ॥ १२.४॥

ॐ ह्रां ह्रीं ह्रूं वैरिमोहि गरुडपक्षि हर हर हिंस
हिंस स्वाहा - इति गरुडमन्त्रः त्रयोविंशत्यक्षरात्मकः (२३) ॥ १२.५॥

ॐ एहि परमेश्वरि स्वाहा - इत्यश्वारूढा दशाक्षरी (१०) ॥ १२.६॥

ॐ नमो भगवति माहेश्वरि अन्नपूर्णे स्वाहा -
इत्यन्नपूर्णाविद्या सप्तदशाक्षरी (१७) ॥ १२.७॥

हसक्षमलवरयूं - इत्येकाक्षरो नवात्मको मन्त्रः (१) ॥ १२.८॥

सहक्षमलवरयीं - इत्येकाक्षरा नवात्मिका (१) ॥ १२.९॥

ॐ ह्रीं नम - इति देवीहृदयविद्या चतुर्वर्णा (४) ॥ १२.१०॥

ॐ रुद्रदयिते योगेश्वरि स्वाहा इति द्वादशार्णा
गौरीविद्या (१२) ॥ १२.११॥

इटि इटि मुटि मुटि काकटमुण्डि स्वाहा - इति
लक्षसुवर्णप्रदा पञ्चदशाक्षरी (१५) ॥ १२.१२॥

ॐ नवकेशी कनकवती स्वाहा - इति निष्कत्रयप्रदा
विद्या द्वादशाक्षरी (१२) ॥ १२.१३॥

एकायकुणाणातुके - इत्यभीष्टदायिनी विद्याऽष्टाक्षरी (८) ॥ १२.१४॥

ऐं ह्रीं श्रीं मातङ्गिन्यै स्वाहा श्रीं ह्रीं ऐं - इति
मातङ्गिनीविद्या द्वादशाक्षरी (१२) ॥ १२.१५॥

ह्रीं श्रीं क्लें अ इ राज्यदे राज्यलक्ष्मी सः क्लें श्रीं ह्री
- इति राज्यलक्ष्मीविद्या षोडशाक्षरी (१६) ॥ १२.१६॥

ॐ श्रीं ह्रीं श्रीं कमले कमलालये प्रसीद प्रसीद
श्रीं ह्रीं श्रीं महालक्ष्म्यै नमः - इति महालक्ष्मीविद्या
सप्तविंशतिवर्णा (२७) ॥ १२.१७॥

ज झ री म हा च ण्ड ते ज स्स क र्षि णी का ल मं था ने हः
- इति सिद्धलक्ष्मीविद्या सप्तदशार्णा (१७) ॥ १२.१८॥

ॐ गलयौं ॐ, ह्रीं गलयौं ह्रीं, क्लीं गलयौं क्लीं, ऐं
गलयौं ऐं, क्लूं गलयौं क्लूं, स्त्रीं गलयौं स्त्रीं,
ह्रीं क्लीं ऐं क्लूं स्त्रीं गलयौं द्रां द्रीं क्लीं क्लूं सः,
एते सप्तगोपालमन्त्राः ॥ १२.१९॥

एतेषां पारायणात् सर्वसिद्धीश्वरो भवेत् - इति शिवम् ॥ १२.२०॥

इति रेणुकागर्भसम्भूत-श्रीदुष्टक्षत्रियकुलान्तक-
श्रीभार्गवोपाध्याय-जामदग्न्य-महादेवप्रधानशिष्य-
महाकौलाचार्य-श्रीमत्परशुरामकृतौ-कल्पसूत्रे
मन्त्रविधान नाम द्वादशः खण्डः समाप्तः ॥ १२॥

## त्रयोदशः खण्डः प्रस्तारक्रमः

अथातः प्रस्तारक्रमं व्याख्यास्यामः ॥ १३.१॥

अथातः स्वेच्छया कतिचित् धुवाक्षराणि केनचित् प्रकारेण विलिख्य, तेष्वन्त्यशिरसि बिन्दुं विलिख्य, उपान्त्यवर्णमारभ्य प्रथमवर्णपर्यन्तं व्युत्क्रमेण एकैकस्य वर्णस्य शिरस्येकैकमङ्कं एकद्वित्रिचतुःपञ्चषडादिरूपमेकोत्तराभिवृद्धिं विलिख्य, तत एकेन द्वयं द्वाभ्यां त्रयं त्रिभिश्चतुष्टयमित्येवं क्रमेण तानङ्कान् गुणयेत् ॥ १३.२॥

तेन हसकलह्रींरूपेषु ध्रुवेषु मायाबीजस्य शिरसि शून्यं लकारस्य शिरस्येकं ककारस्य द्वौ सकारस्य षट् हकारस्य चतुर्विंशतिः - इति सिध्यति ॥ १३.३॥

ईदृशस्य बिन्द्वाद्यं कवर्गस्य खण्डाङ्क - इति संज्ञा, नष्टोद्दिष्टादिषु व्यवहारार्थं कृता ॥ १३.४॥

तत औत्तराधर्येण चतुर्विंशतिवारं विलिख्य तदधस्तथैव सकारांस्तदधः ककारांस्तदधः लकारांस्तदधः मायां विलिखेत् ॥ १३.५॥

ततः अनयैव रीत्या सादिचतुष्टयं षट्षड्वारं लिखेत् ॥ १३.६॥

कादित्रयं द्विद्विवारं लिखेत् ॥ १३.७॥

लकारमायां च एकैकवारं लिखेत् ॥ १३.८॥

एवं सति द्वितीयपङ्कौ एकमक्षरं न्यूनं सम्पद्यते ॥ १३.९॥

तं लकारं पञ्चमस्थाने लिखेत् ॥ १३.१०॥

प्रथमपङ्क्तिस्तु पूर्वमेव पूर्णास्तीति न तत्र लेखनप्रसक्तिः ॥ १३.११॥

तृतीयादिषु पङ्क्तिषु द्वौ द्वौ वर्णौ न्यूनौ भवतः,
तावेकस्यां पङ्क्तौ क्रमाद्विलिख्य तदधस्तनपङ्कौ व्युत्क्रमात्
तावेव लिखेत् ॥ १३.१२॥

पुनस्तनपङ्क्तिद्वये विशिष्टौ ध्रुवौ तौ क्रमान् क्रमाभ्यां
लिखेत् ॥ १३.१३॥

एवमान्तकरणेनैकः प्रस्तारखण्डो भवति ॥ १३.१४॥

यावन्तो ध्रुवास्तावन्त एव तत्प्रस्तारस्य खण्डाः
समसङ्ख्यावृत्तका भवन्ति ॥ १३.१५॥

तेष्वाद्ये खण्डे वृत्ताद्यो ध्रुवाद्य एव, द्वितीये खण्डे
ध्रुवद्वितीय एव वृत्ताद्यः, तृतीये खण्डे धुवतृतीय एवेत्यपि
नियमोऽस्ति ॥ १३.१६॥

ततश्च द्वितीयखण्डप्रथमवृत्ते पूर्व एव क्लृप्तद्वितीयस्य
सकारात् परतः संस्थापयेत् ॥ १३.१७॥

एवं तृतीयखण्डादिमवृत्ते कहसलह्रीमिति क्रमः ॥ १३.१८॥

चतुर्थखण्डादौ लहसकह्रीं पञ्चमखण्डादौ ह्रीं
हसकल इति क्रमः ॥ १३.१९॥

प्रथमखण्डान्ततृतीयवृत्तेऽपि यौ द्वौ शिष्येते तौ
द्वावपि कह्रीमिति लेख्यौ प्रथमवृत्ते तयोः पौर्वापर्यस्य क्लृप्तस्य
त्यागे मानाभावात् ॥ १३.२०॥

एतेन नवमादिवृत्तेष्वपि सकारह्रीङ्कारयोः क्रमेण

लेख इत्यादि सिध्यति ॥ १३.२१॥

तत्तत्खण्डद्वितीयादिवृत्तानि प्रथमखण्डवदेव लेखनीयानि ॥ १३.२२॥

यावत्प्रथमखण्डाद्यवृत्ताक्षराणि व्युत्क्रमेण पतन्ति तावत्पर्यन्तोऽयं प्रस्तारः प्रथमवृत्तप्रथमाक्षरशिरोङ्को ध्रुवार्णसङ्ख्यया गुणितश्चेत् प्रस्तारवृत्तसङ्खयापि निष्पद्यते ॥ १३.२३॥

तेन पञ्चध्रुवके चतुर्विंशतिः चतुर्ध्रुवके षट् द्वितीयध्रुवके द्वौ एकध्रुवके एकं - इति शिवम् ॥ १३.२४॥

इति रेणुकागर्भसम्भूत-श्रीदुष्टक्षत्रियकुलान्तक-
श्रीभार्गवोपाध्याय-जामदग्न्य-महादेवप्रधानशिष्य-
महाकौलाचार्य-श्रीमत्परशुरामकृतौ-कल्पसूत्रे
प्रस्तारक्रम नाम त्रयोदशः खण्डः समाप्तः ॥ १३॥

## चतुर्दशः खण्डः नष्टोद्दिष्टकथनम्

अथातो नष्टोद्दिष्टं व्याख्यास्यामः ॥ १४.१॥

हसकलह्रीं इत्येषां पञ्चानामक्षराणां ध्रुवप्रस्तारे विंशत्यधिकशतं वृत्तानि तेषु चतुरशीतितमवृत्तजिज्ञासायां चतुरशीतिसङ्खयैव नष्टोऽङ्कः ॥ १४.२॥

खण्डाङ्कास्तु चतुर्विंशतिः षट् (द्वे) एकं शून्यं चेति पूर्वमेवोक्त्या तेनैकैकेन नष्टाङ्कं विभजेत् ॥ १४.३॥

तथा चतुर्विंशत्या चतुरशीतेर्हरणे त्रयो लब्धाः द्वादशशिष्टास्ततः षड्भिः द्वादशानां हरणे यद्यपि निश्शेषता भवति तथाऽऽपि विभाजकानां सशेषत्वादत्राप्येकं षट्कमवशेष्यं तेनैकलब्धं षट् षष्ठा ततो द्वाभ्यां षण्णां हरणे सावशेष विभजनेन द्वौ लब्धौ द्वौ शिष्टौ तत एकेन सशेषहरणे एकं लब्धं एकं शिष्टम् । तस्य शून्येन विभजनेन शून्यं लब्धं शून्यं शिष्टं तेन त्र्येकद्वयेकशून्यानि लब्धाङ्काः - एते प्रत्येकं सैका कार्याः । तेन चतुर्द्वित्रिद्वयेकाङ्का भवन्ति ॥ १४.४॥

ततश्च पूर्वक्लृप्तक्रमेषु हसकलह्रीं इत्याकारकेषु ध्रुववर्णेषु चतुर्द्विद्वयेकसङ्ख्यावर्णास्तान् सङ्खयायै निष्कास्य पृथक् लिखेत् ॥ १४.५॥

यथा वाग्बीजात्मकबीजचतुर्थे लकारः ॥ १४.६॥

सजिज्ञासितवृत्ते प्रथमो वाग्बीजात्मके द्वितीयः सकार एव तत्र द्वितीयः ॥ १४.७॥

अथानयोः लकारसकारयोः पूर्वलिखितत्वात् परित्यागे गणने वाग्बीजपञ्चम एव तृतीयो भवति ॥ १४.८॥

माययैव जिज्ञासितवृत्ते तृतीया कथकवर्गात् द्वितीयोपात्तसकारपरित्यागेन गणनया ककार एव पूर्वो भवतीति स तत्र चतुर्थः ॥ १४.९॥

वाग्बीजस्य प्रथमो हकारः स तत्र पञ्चमो भवतीति लसह्रीङ्कह इत्याकारकं चतुरशीतितमं वृत्तं निष्पद्यते - इति शिवम् ॥ १४.१०॥

इति रेणुकागर्भसम्भूत-श्रीदुष्टक्षत्रियकुलान्तक-श्रीभार्गवोपाध्याय-जामदग्न्य-महादेवप्रधानशिष्य-महाकौलाचार्य-श्रीमत्परशुरामकृतौ-कल्पसूत्रे नष्टोद्दिष्टकथन नाम चतुर्दशः खण्डः समाप्तः ॥ १४॥

पञ्चदशः खण्डः कृतनष्टनिरूपणम्

इत्थं कृतनष्टो लसह्रीङ्कह इत्याकारकं वृत्तं पञ्च-धुवप्रस्तारे कतितममिति जिज्ञासायां तद्वृत्तं भूमौ विलिख्य तच्छिरसि खण्डाङ्कान् लिखेत् ॥ १५.१॥

ते यथा - चतुर्विंशतिः षट् दे एकं शून्यं चेति ॥ १५.२॥

ते च लकारादयः वर्णाः क्लृप्तक्रमेषु हसकलह्रीं - इत्याकारकेषु पञ्चसु ध्रुववर्णेषु पूर्वलिखितपरित्यागेन गणनया चतुर्थद्वितीयतुतीयद्वितीयप्रथमाः क्रमेण भवन्ति ॥ १५.३॥

तेन तेष्वङ्केषु प्रत्येकमेकाङ्कनिरासे सति त्र्येकद्व्येकशून्यानि सम्पद्यन्ते ॥ १५.४॥

ते चाङ्काः लकारादीनामधः क्रमाल्लेख्याः ॥ १५.५॥

अथ अधोङ्केनोर्ध्वाङ्कं गुणयित्वा तत्तदक्षरा-
धोङ्काधःक्रमेण लिखेत् ॥ १५.६॥

यथा चतुर्विंशतिस्त्रिभिर्हननात् द्वासप्ततिभिः षण्णा-
मेकेन हननात् षट् द्वयोर्द्वाभ्यां घाते चत्वारः एकस्यैकेन
हनने एकं शून्यस्य शून्येन गुणने शून्यं एवमेतेषां सर्वेषां
मेलने त्र्यशीतिः तेष्वङ्काङ्कप्रक्षेपे चतुरशीतिः सम्पद्यते - इति
शिवम् ॥ १५.७॥

इति रेणुकागर्भसम्भूत-श्रीदुष्टक्षत्रियकुलान्तक-
श्रीभार्गवोपाध्याय-जामदग्न्य-महादेवप्रधानशिष्य-
महाकौलाचार्य-श्रीमत्परशुरामकृतौ-कल्पसूत्रे
कृतनष्टनिरूपण नाम पञ्चदशः खण्डः समाप्तः ॥ १५॥

## षोडशः खण्डः योनिलिङ्गयन्त्ररचनाविधानम्

अथातो योनियन्त्रं व्याख्यास्यामः ॥ १६.१॥

स्वेष्टमानेन त्रिकोणं विलिख्य, तिसृषु रेखासु
दशदश चिह्नानि समांशाङ्कानि कृत्वा, तेषु दशदशसूत्राणि
पातयेत् इत्येकविंशत्यधिकशतसङ्ख्याकाः प्रस्तोत्पन्नभेदा
भवन्ति ते तत्र लेख्याः सर्वमध्यत्रिकोणे कर्म लेख्यम् ॥ १६.२॥

इत्थं योनिचक्रं विधाय, लिङ्गचक्रं व्याकुर्मः ॥ १६.३॥

पूर्वे एकं चतुष्कोष्ठात्मकं कोष्ठं विलिख्य, तदधः
कोष्ठत्रयं तदधः पञ्च तदधः पार्श्वयोः षट् षड्विहाय
यथासम्प्रदायं चत्वारिंशत्कोष्ठात्मकं लिङ्गं विलिख्य, तत्संलग्नं
चतुरश्रद्रयं वह्न्यादिकोणचतुष्टयं कोष्ठचतुष्टयविशिष्टं
विलिख्य, तत्र सम्प्रदायेन वाग्भवे बीजभेदान् विंशत्यधिक-

शतसङ्ख्याकान् प्रस्तारसञ्जनितान् विलिख्य, विशिष्टेषु तृतीयबीजस्य प्रस्तारसञ्जनितचतुर्विंशतिभेदान् विलिखेत् ॥

अथ चतुरश्रद्वयान्तराले षड्रेखाया(पा)तनेन सप्तकोष्ठान् संविधाय, तत्र दिननित्यायुगनित्याक्षराणि षट् संविलिख्य, शिष्टे कोष्ठे चोदयाक्षरं विलिख्य तत्रावाह्य पूजयेत् - इति शिवम् ॥ १६.५॥

इति रेणुकागर्भसम्भूत-श्रीदुष्टक्षत्रियकुलान्तक-श्रीभार्गवोपाध्याय-जामदग्न्य-महादेवप्रधानशिष्य-महाकौलाचार्य-श्रीमत्परशुरामकृतौ-कल्पसूत्रे योनिलिङ्गयन्त्ररचनाविधान नाम षोडशः खण्डः समाप्तः ॥ १६॥

## सप्तदशः खण्डः अङ्गविद्या

अथातः सर्वमङ्गविद्यायाः स्वरूपबाहुल्योपदेशं तद्वि-नियोगप्रस्तावं च करोति ॥ १७.१॥

तत्र वाताद्यैः ग्रासमयान्तैः अकाराद्यैः क्षकारान्तैः मातृकाविसराक्षरैः प्रोक्तसङ्ख्यैरित्यर्थः ॥ १७.२॥

शतैः पञ्चभिः अकारादीनां षोडशस्वराणां ककारादीनां च पञ्चत्रिंशतां क्षकारान्तानां प्रत्येकं षोडशस्वरयो-जनतः षोडशानां षोडशानामप्येवं षट्सप्तत्यधिकपञ्चशत-सङ्ख्यानां मातृकाविसराक्षराणां मूलविद्यायाः आदौ क्रमशः प्रत्येकं योजनतः षट्सप्तत्यधिकपञ्चशतसङ्ख्याविद्यारूपाणि सन्तीति तस्यानवस्थाने मूलविद्यायाश्चतुर्दशस्वरस्थाने स्वरान् षोडश योजयेत् ॥ १७.३॥

पूर्वोक्तैर्विद्यादियोजितैः षट्सप्तत्यधिकपञ्चशतैरक्षरैः तत्सङ्ख्यारूपभेदाय अन्त्ये प्रत्येकं क्रमात् षोडशस्वरयो-जनतः षोडशाधिकद्विशतोत्तरनवसहस्रसङ्ख्याविद्यारूपाणि भवन्तीति तैः सम्प्रोक्तसङ्ख्यैः विद्यारूपैः प्रयोजयेद्यन्त्रैरिति आदौ वृत्तत्रयं तद्बहिः षट्कोणं तद्बहिरष्टदलं विधाय तद्बहिर्वृत्तत्रयं विदध्यात् ॥ १७.४॥

तेषु विद्याकूटानुक्तक्रमेण न्यसेत् ॥ १७.५॥

तेष्वाद्यं मध्यतः साध्यसमेतं विलिखेत् ॥ १७.६॥

षट्कोणेषु चत्वारि चत्वारि विलिखेत् ॥ १७.७॥

अष्टच्छदेषु प्रत्येकं पञ्चपञ्च समालिखेत् ॥ १७.८॥

बहिर्वृत्तान्तरयुगे मातृकां मायया चितां विलोमामनुलोमां स्वेन
सम्यक् समालिखेत् ॥ १७.९॥

अन्तःषडन्तरालेषु पर्यायदिनसम्भवे नित्ये लिखेत् ॥ १७.१०॥

प्रादक्षिण्येन सर्वत एवं यन्त्राणि जायन्ते ॥ १७.११॥

तैः कूटैरुक्तयोगतः शतं च चत्वारिंशच्च चत्वारि च
ततः क्रमादिति वृतं, एवमन्यानि कूटानि प्रोक्तानि क्रमेण
विलिखेत् ॥ १७.१२॥

मध्ये नामसमेतानि तदन्यान्यभितो लिखेत् ॥ १७.१३॥

त्रयोदशमितैर्लक्ष्यैः सप्तविंशतिसङ्ख्याकैः सहस्रैश्च
शतेनापि चतुर्भिः तानि सङ्ख्यया यन्त्राणि जायन्ते ॥ १७.१४॥

तैश्च सा सर्वमङ्गला एवं कामेश्वर्यादिषोडशनित्यानां
पृथक् पृथक् यन्त्राणि स्युः ॥ १७.१५॥

तस्मादाभिरसाध्यानि न कदाचिच्च कुत्रचित् विद्यते
तेषु यत्किञ्चित् वक्ष्ये कोशेषु तोन्यै वदेन्नाथात्मकानि येन
स्युस्तेन च मैर्भित्त्वा षोडशधा मन्त्री विदध्यात् ॥ १७.१६॥

विनियोजकं विशालमध्यविन्यासं विदध्यात् ॥ १७.१७॥

नवकोष्ठकं प्रागादिमध्यपर्यन्तं प्रादक्षिण्यक्रमाल्लिखेत् ॥ १७.१८॥

नवानि नवसु प्राज्ञस्तेषु ऋक्षाणि चालिखेत् ।
सप्तम्या साध्यसंयुक्तं नाथां देवीश्च तत्क्रमात् ॥ १७.१९॥

यद्यद्वि (द्वि) वाञ्छितं कर्म तत्तत्तेषु विलिख्य वै ।
पीठे वा भूतले वाऽपि पूजयेत् प्रोक्तवासरम् ॥ १७.२०॥

ततः प्राप्ते वाञ्छितार्थे स्वात्मन्युद्वास्य देवताः ।
चक्रं प्रक्षाल्य तत्तोयं केदारादिषु निक्षिपेत् ॥ १७.२१॥

एवमन्यानि यन्त्राणि प्रोक्तानि क्रमशो भुवि ।
विनियोज्यान्यभीष्टेषु कार्येषूक्तक्रमेण वै ॥ १७.२२॥

परसङ्ख्यासमेतानि तेषु तेष्वप्ययं विधिः ।
सर्वतः सौम्यकर्माणि सिद्ध्यन्ते वाऽनया द्रुतम् ॥ १७.२३॥

वश्येषु ज्ञानसम्पत्त्यै सर्वप्रत्यूहशान्तये ।
लक्ष्मीप्राप्तौ तथारोग्यसिद्धौ रोगार्तिशान्तिषु ॥ १७.२४॥

विजयाय समस्तापत्तरणायाभिवृद्धये ।
पुत्रावाप्त्यै च रक्षायै पूजयेत् तेषु तत्क्रमात् ॥ १७.२५॥

गजाश्वगोखरोष्ट्राजमहिषीणां विवृद्धये ।
तेषां रोगादिपीडासु तच्छान्त्यै च यथाक्रमम् ॥ १७.२६॥

निर्माय नवयन्त्राणि तत्र तत्रार्चयेच्छिवाम् ।
तेषु तेषूक्तकार्येषु तत्तत्सम्प्राप्तिहेतवे ॥ १७.२७॥

नवप्रकारयुक्तानि षोडशप्रथमादिषु ।
तिथिषु प्रोक्तरूपाणि तत्र तां सर्वमङ्गलाम् ॥ १७.२८॥

पूजयेत् काङ्क्षितावाप्त्यै तेन सर्वसिद्धिर्भवेदिति शिवम् ॥ १७.२९॥

इति रेणुकागर्भसम्भूत-श्रीदुष्टक्षत्रियकुलान्तक-
श्रीभार्गवोपाध्याय-जामदग्न्य-महादेवप्रधानशिष्य-
महाकौलाचार्य-श्रीमत्परशुरामकृतौ-कल्पसूत्रे
अङ्गविद्या नाम सप्तदशः खण्डः समाप्तः ॥ १७॥

अष्टादशः खण्डः वासनाध्यायः

अथातो वासनां व्याख्यास्यामः ॥ १८.१॥

तदात्मकं समुदयं मदात्मिकापि विश्रितम् ।
हयात्मकं आत्मस्वरूपं तैर्भावयेत् ॥ १८.२॥

कालेनान्यत्वदुःखार्तिवासनाशतशो ध्रुवम् ।
पराहन्तामयं सर्वस्वरूपस्वात्मविग्रहम् ॥ १८.३॥

सदात्मकं स्फुरत्ताख्यं अशेषोपाधिवर्जितम् ।
प्रकाशरूपमात्मत्वे वस्तु सद्भासते परम् ॥ १८.४॥

वरयन्ते एवमतो लोके नान्यत्र मन्त्रवदक्षरम् ।
यद्विद्येति हि मन्वीत सर्वधा सर्वतः सदा ॥ १८.५॥

अथ मन्त्रार्थः-
ललितायास्त्रिभिर्वर्णैः सकलार्थोऽभिधीयते ।
शेषेण देवीरूपेण तेन स्यादिदमीरितम् ॥ १८.६॥

अशेषतो जगत् कृत्स्नं हृल्लेखात्मकतः परम् ।
तस्याश्चार्थस्तु कथितः सर्वतन्त्रेषु गोपितः ॥ १८.७॥

व्योम्ना प्रकाशमानत्वं ग्रसमानत्वमग्निना ।
ते यो विमर्श ईकार बिन्दुना तन्निफालनम् ॥ १८.८॥

१. ह्रीं श्रीं अं कामेश्वरीपादुकां पूजयामि ।
२. ह्रीं श्रीं आं भगमालिनीपादुकां पूजयामि
३. ह्रीं श्रीं इं नित्यक्लिन्नापादुकां पूजयामि ।
४. ह्रीं श्रीं ईं भेरुण्डापादुकां पूजयामि ।
५. ह्रीं श्रीं उं वह्निवासिनीपादुकां पूजयामि ।
६. ह्रीं श्रीं ऊं महावज्रेश्वरीपादुकां पूजयामि
७. ह्रीं श्रीं ऋं शिवदूतीपादुकां पूजयामि ।
८. ह्रीं श्रीं ॠं त्वरितापादुकां पूजयामि ।
९. ह्रीं श्रीं ऌं कुलसुन्दरीपादुकां पूजयामि ।
१०. ह्रीं श्रीं ॡं नित्यापादुकां पूजयामि ।
११. ह्रीं श्रीं एं नीलपताकापादुकां पूजयामि ।
१२. ह्रीं श्रीं ऐं विजयापादुकां पूजयामि ।
१३. ह्रीं श्रीं ओं सर्वमङ्गलापादुकां पूजयामि ।
१४. ह्रीं श्रीं औं ज्वालामालिनीपादुकां पूजयामि

१५. ह्रीं श्रीं अं चित्रापादुकां पूजयामि ।
१६. ह्रीं श्रीं अः त्रिपुरसुन्दरीपादुकां पूजयामि ॥ १८.९॥

शङ्कुच्छायया दिक्परिज्ञानक्रमं प्रस्तावसहितं उपदिशति ॥ १८.१०॥

तत्र भानोर्गत्या आदित्यदक्षिणोत्तरायणक्रमगति-भेदज्ञानच्छाययेति यावत् ॥ १८.११॥

तन्मध्यं बिन्दुमध्यं इत्येतत्क्रियाविशेषणम् ॥ १८.१२॥

पूर्वापरद्वये पूर्वापरात्मिकयोः दिशोः प्राग्वच्छिन्ने कृत्वेत्यर्थः ॥ १८.१३॥

तदभिमतः तद्द्वयमवष्टभ्य सममानपारभ्रान्त्या तच्चि-ह्नद्वयान्तरालमानपरिभ्रान्त्यां स्वेच्छाधिकेनार्धेन मानेन अन्योन्यतुल्येन परिभ्रान्त्यां कृत्वा वृत्तद्वयं कृत्वेत्यर्थः ॥ १८.१४॥

तयोः पूर्वापरयोः संश्लेषसञ्जातमध्यदक्षोत्तरस्थित इत्यस्य उत्तरत्र सन्धिद्वये इत्येते विशेषं प्राक्प्रत्यक् सूत्रमध्ये प्राक्प्रत्यगात्मसूत्रमध्ये तु संहारे दक्षोत्तरं दक्षिणोत्तरं तेषां मण्डपादीनामग्रैः सूत्राग्रैः ॥ १८.१५॥

एतदुक्तं भवति - जीमूताद्यपरिवेष्टितभानौ दिवसे छायादिभिरनावृतदेशे जलयन्त्रादिभिः सुसमीकृतस्य दर्प-णोदरसङ्काशस्य भूतलस्य मध्ये बिन्दुं कृत्वा तदवष्टम्भतः प्रतिदिशं द्वादशाङ्गलमानेन वृत्तं कृत्वा तत्र षडङ्गलमान-परिणाहमूलमुत्तरोत्तरपरिणाहापचयेन सूचीमात्रीकृताग्र -परिणाहं मृद्वाकृतिं शङ्कुमूलमानोच्छ्रा(छा)यसहितं वृत्ताकारं शिल्पिवरेण निर्मितं वृत्तमध्यस्थबिन्दुमध्ये यथा शङ्कुमूल-परिणाहमध्यं भवति तथा तच्छङ्कुच्छायाग्रस्य पूर्वाह्ने तत्तद्वृत्तरेखापश्चिमभागे यत्र सम्पातस्तत्र ततोऽपराह्ने तच्छङ्कुच्छायाग्रस्य तद्वृत्तरेखापूर्वभागे चिह्नं विधाय तच्चिह्नद्वयं प्रापयत् सूत्रं तत्पूर्वापरं परिकल्प्य तच्चिह्नद्वया-वष्टम्भेन तच्चिह्नान्तरालमानस्य चेष्टाधिकेनार्धमानेनान्योन्य-समेते किञ्चिदन्योन्यसंश्लिष्टं पूर्वापरं वृत्तद्वयं विधाय तद्वृत्तरेखादक्षिणोत्तरसन्धिद्वयप्रापि प्राक्पश्चिमसूत्रमध्य -गत्या तिर्यग्रूपेण यत् सूत्रं दक्षिणोत्तरं परिकल्प्य तत्प्राक्

प्रत्यक्दक्षिणोत्तरसूत्रद्वयसम्पाताद्वृत्तवक्ष्यमाणमानेन तुल्य-
रूपपरिकल्पितसूत्राग्रैस्तैस्तेषां मण्डपादीनां प्राक्प्रत्यग्द-
क्षिणोत्तरात्मकदिक्चतुष्टयं परिकल्पयेत् ॥ १८.१६॥

सर्वप्रयत्नेन विद्याऽऽराधितद्वारा पूर्णताख्यातिसमा-
वेशनेच्छा चेत्येते समयाचारिकाः । परे च शास्त्रानुशिष्टाः ॥ १८.१७॥

इत्थं विदित्वा विधिवदनुष्ठितवतः कुलनिष्ठस्य
सर्वतः कृतकृत्यता शरीरत्यागे श्वपचग्रहकाश्योर्नान्तरं
जीवन्मुक्तो भवति ॥ १८.१८॥

य इमामष्टादशखण्डीं महोपनिषदं महात्रैपुर-
सिद्धान्तसर्वस्वभूतामधीते स सर्वेषु यज्ञेषु यष्टा भवति ।
यं यं क्रतुमधीते तेन तेनास्येष्टं भवति इति हि श्रूयते
इत्युपनिषत् - इति शिवम् ॥ १८.१९॥

य एवं वेदेत्युपनिषत् ॥ १८.२०॥

भद्रं नो अपि वादय मनः ॐ शान्तिः शान्तिः शान्तिः ॥ १८.२१॥

इति रेणुकागर्भसम्भूत-श्रीदुष्टक्षत्रियकुलान्तक
श्रीभार्गवोपाध्याय-जामदग्न्य-महादेवप्रधानशिष्य-
महाकौलाचार्य-श्रीमत्परशुरामकृतौ-कल्पसूत्रे
वासना नामाष्टादशः खण्डः समाप्तः ॥ १८॥

इति श्रीपरशुरामकल्पसूत्रपरिशिष्टं द्वितीयभागः सम्पूर्णम् ॥

इति श्रीदुष्टक्षत्रियकुलकालान्तकरेणुकागर्भसम्भूत
महादेवप्रधानशिष्यजामदग्न्यश्रीपरशुरामभार्गव-
महोपाध्यायमहाकुलाचार्यनिर्मितं कल्पसूत्रं सम्पूर्णम् ॥